# वसन्ततिलकभाणः ।

श्रीमहामहोपाध्याय वरदाचार्य्यकृतः ।

श्रीयुक्त डमरुवल्लभ शर्म्मणा
संशोधितः ।

श्रीयुत बसाकोपनामकभुवनचन्द्रमहोदयस्य प्रार्थनया
तद्द्वारैव सम्वादज्ञानरत्नाकरयन्त्रे यन्त्रितः ।

कलिकातायाम् ।

सम्वत् १९२५ इ० सन् १८६८ ।

# वसन्ततिलकभाणः ।



श्रीमहामहोपाध्याय वरदाचार्य्यकृतः ।

श्रीयुक्त डमरुवल्लभ शर्म्मणा
संशोधितः ।



श्रीयुत वसाकोपनामकभुवनचन्द्रमहोदयस्य प्रार्थनया
तद्द्वारैव सम्वादज्ञानरत्नाकरयन्त्रे यन्त्रितः ।

---

कलिकातायाम् ।

सम्वत् १९२५ इं० सन् १८६८ ।

# भूमिका ।

अस्ति समस्तपत्तनमल्लकीभूता वैदग्ध्यशालाधीनीकृतवारयुवतिशतविटनिविडा काचन काञ्चीनाम पुरी। यस्यां विभवसम्भावितजन्तुजाताश्रितायामवधीरितपुरुहूतपुटभेदनायां वसन्तो विद्वांसः स्वर्गाऽपवर्गाऽऽनन्दमिहाऽमुत्रचानुभूतिपद्धतिमारोहयन्ति। तत्रैव खल्वेकस्या घटिकाया अभ्यन्तरे श्लोकशतनिर्माणेषु श्रयेन घटिकाशतइति प्रख्यातमुपगतस्य सुदर्शनस्य सुतोऽनर्गलकवितासरितिनिष्णातः वरदार्य्यनामा तर्कार्कसम्पर्ककर्कशीभूतचित्तः पण्डितः प्रबभूवः। स च कविवरगीयमानकीर्त्तिततिधीरः नाटकं सप्रहरणमित्यादिषु दशसु रूपकेषु तृतीयस्य भणनप्रधानस्य वसन्ततिलकनामकस्य भाणस्य निर्म्माणमनु युयुजे। स एष भाणोञ्जसा रसास्वादनदानपरिभूतनिबन्धान्तरो लेखकमुद्रयितृसाचिव्य विरहसमाहृतलोपः प्रसिद्धिमुपनेतव्य इति मन्यमानेन मया यथामति संशोध्यास्य मुद्रणाय विनियुज्यते स्म विद्वान् भुवनचन्द्रः। तेन च भुवनचन्द्रेण मदनुग्रहायासितचित्तेन मुद्रितः।

भाणः स एष वरदार्य्यकविप्रणीतो
नेपालदेशनिलयेन विदाम्वरेण।
संशोधितो भुवनचन्द्रविमुद्रितश्च
प्रीतिन्ददातु सततं रसिकान्तरेभ्यः॥

विज्ञाः कवेर्भवतु वा वचनप्रकाशो
बुद्धेरहन्तु नितरामनभिज्ञ एव।
सन्तस्तथाप्यकृतर्कीकृतपक्षपात
वन्तः कथन्तकथयेयुरिमङ्गुणाढ्यम्॥

श्रीडमरुवल्लभशर्मणा।

# वसन्ततिलकम् ।



जयन्ति जगतां मातुस्तनकुङ्कुमबिन्दवः ।
मुकुन्दाऽऽश्लेषसङ्क्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥

अपि च ।

क्रीडाभिन्नहिरण्मयशुक्तिकुहरे रत्नात्मनावस्थितान्
हारं हारमुदारकुङ्कुमरसानव्याजभव्यान्नखैः ।
वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावली-
स्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु नः ॥ २ ॥

नान्द्यन्ते सूत्रधारः ।

सविनयानन्दम् । भो भोस्समन्ततस्सन्ततमधुमदमुदितमत्तकामिनीविलासविवशापाङ्गस्खलितविस्खलितविविधरसिकजनविहारहारिणी हरिहरहिरण्यगर्भादिनिखिलसुराऽसुरमणिमुकुटोपलालितशासनस्य भगवतो मकरध्वजस्य पूजोत्सवारम्भसम्भ्रान्तसकलवारविलासिनीसमादेशसम्पादनचटुलविटनिबिडनिबद्धसञ्चारा काञ्चीपुरी । (समन्तादवलोक्य सानन्दम् ।)

निरन्तरनिरवधिकमधुरविविधरसभरितनिरवद्य-गद्यपद्यमयभारतीभरितसङ्गीतसाङ्गाऽनङ्गनिगमनिरतिशयपरिचयतरङ्गितनिखिलकलाकलापविस्ताराः। ( सर्व्वे सभास्ताराः । )

( ससम्भ्रमम् आकाशे कर्णन्दत्वा, किम्ब्रूथ )

सकलजनहृदयाऽऽनन्दकन्दलीविकसनविदग्ध-मुग्धमधुरगम्भीरनिबन्धबन्धुरं किमपिरूपक मभिनेतव्यमिति । (स्मरणमभिनीय ।)

स्रुतं हि मया निखिलनगरातिशायिन्यां सकल कलाकलापविस्तारशालिन्यामुज्जयिन्याम् ।

यथा किल ।

काञ्चीपुरे कविरभूद्वरदार्य्यनामा
सुनुः सुदर्शनकवेर्घटिकाशतस्य ।
वेदान्ततर्कविविधार्थविचारधीरो
वात्स्यो वसन्ततिलकं स बभाण भाणम् ॥

स भाणः सकलहृदयाऽनुरञ्जकः सुप्रयोग इति अहमपि तमेव प्रयुञ्जानः सामाजिकानुपतिष्ठे ।

अलङ्कारवती सूक्तिरभिनन्द्यगुणा सती ।
सभायां सरसैर्वाक्यैः सन्तोषयति मे मनः ॥

किं ब्रूथ । तस्य तर्ककर्कशहृदयस्य कथमेतादृशमुक्तिमाधूर्य्यमिति । ( स्मृतिमभिनीय । )

(भवन्त एव खल्वेवमादिशन्ति ।)

तर्केषु कर्कशतराः स्फुरयापि पुंसां
काले भवन्ति मृदवः कवितासु वाचः।
दैत्येन्द्रशैलकुलिशं दयिताकपोले
नाथस्य कोमलमुदाहरणन्नखन्नः॥

(पुनः कर्णन्दत्वा। किंब्रूथ।)

साधु सम्यगुक्तम्।

समुल्लासो वाचां सरसमधुनिष्यन्दलहरी
समुन्मेषद्वेषी सकलरसपोषोपजनकः।
न केषामाधत्ते मनसि परितोषन्नवनवै-
र्विलासैरुन्मीलद्विकचितमधूलीपरिमलः॥

यदि तस्य कवेः प्रबन्धः सत्वरेण भवताऽभिनेतव्यमिति। (सपरितोषम्।)

सोयं चेत्कविरत्र सुन्दरगिरः सन्त्येव तेषामसौ
मध्ये कोपि वयं च नाट्यरचनापाण्डित्यपारङ्गताः।
भागश्चेद्दशरूपकेषु मधुरस्तत्सर्व्वमास्तामियं
सारज्ञा हि सभा किमन्यदधुना वाञ्छानुकूलोविधिः॥

(परिक्रम्य। दिशोऽवलोक्य। साश्चर्य्यम्।)

मधुकरपरिमुक्तमाधवीनां
मलयसमीरविलोलमञ्जरीणाम्।
कथयति मधुमासवासरागा
मुपगतमुन्मदकोकिला वनश्रीः॥

अपि च।

मन्दानिलेन मधुरं परिनर्त्तितायाः
पर्य्यायतः प्रचलदङ्गुलिपल्लवायाः।

मञ्जुस्वरैर्मधुकरैरुपगीयमानं
नाट्यं मनोहरमिदं नवमल्लिकायाः ॥

नेपथ्ये । साधु भरतपुत्र साधु ।
प्रस्तुतानुकूलवर्णनेन वन्दनीयोऽसि ।

अपि तु नवमल्लिकेति स्थाने वासन्तिकेति वक्तव्यम् ।

अथ खलु त्रिभुवनविजयिनो मकरध्वजस्य विजयवैजयन्ती वसन्तसेनायाः कनीयसी भरताचार्य्यशिक्षितनिखिलनृत्यविद्याप्रथमरङ्गाऽधिरोहणमहोत्सवसम्भावितनिखिलकुशीलवनिकरोपगीयमाना नृत्यति वासन्तिका । वयमपि तदवलोकनाय त्वारताः समागच्छामः ।

सूत्र । श्रुत्वा सहर्षं त्वर्य्यतां त्वर्य्यतां ।

अहमप्यमुना शृङ्गारशेखरेण सम्भूय तस्या महोत्सवमनुभवामि ।

इतिनिष्क्रान्तः प्रस्तावना ।



(ततः प्रविशति शृङ्गारशेखरः सवितर्कम् ।)

ताटावधौ तरलकुण्डलगण्डमूलं
दुर्वारघर्मजलदूषितपत्ररेखम् ।
तस्या मुखं तरललोचनचन्द्रिकाया
धन्यो विलोकयति तादृश मन्दहासम् ॥

समन्तादवलोक्य । अहो खलु रमणीयता प्रभातवेलायाः इदानीं खलु ।

मालिन्यं परिदृश्यते हिमरुचौ मन्दश्रियस्तारकाः
शीताः के च न सञ्चरन्ति कमलामोदस्पृशो मारुताः ।
आसीदन्ति च चक्रवाकमिथुनान्यन्योन्यमुत्कण्ठया
पादैस्ताडितकैरवा मधुलिहो गच्छन्ति पद्माटवीम् ॥

अपि च ।

किञ्चिद्विश्लथकेशवान्तकुसुमाः क्रीडाविलोलांशुका
लुप्तालुप्तशरीरचन्दनतया लोकैकनेत्रोत्सवाः ।
सम्भोगश्रमविह्वलैरवयवैः सङ्केतशालान्तरा
न्निद्राशेषकषायितार्द्धनयना निर्यान्ति वाराङ्गना ॥

पुरोऽवलोक्य सकौतुकम् । एष खलु हेषारवपरिकुपितवनमहिषविषाणकोटीपाटनभयचकितरथतुरगविषमितरथचरणसंघट्टनविघट्टितविकटकटकधातुधूलीपुञ्जरञ्जितद्रवपिञ्जरवपुरुदयाद्रिशिखरमारूढो भगवानंशुमाली इदानीं खलु ।

आपाटलैः प्रथममङ्कुरितैर्मयूखै
रह्नाम्पतिः प्रथमशैलविहारिणीनाम् ।
सोयङ्करोति सुरपुङ्गवसुन्दरीणां
कर्णेषु कल्पतरुपल्लवभङ्गलक्ष्मीम् ।

किञ्च ।

तरुणान्दिवाकरमयूखमञ्जरी
मरुणामशोकशिखरावलम्बिनीम् ।
कमनीयपुष्पमनसा समाश्रितां
मधुपो विडम्बयति मञ्जुभाषिणीम् ॥

सौरभाघ्राणमभिनीय सलज्जम् । सत्यं मधुकर इवाऽहमपि वासन्तिकाऽनुरक्तहृदयः परिभ्रान्तोऽस्मि । सत्यमशोकमञ्जरीमेव भजते मधुकरी सवितर्कम् अधुना निखिलकुसुमहेतुना वसन्तेन भवितव्यम् । (समन्तादवलोक्य ।)

उद्वेलपञ्चमसुदञ्चितबालचूत
मुद्दामकेशरमुदारसमीरपोतम् ।
उन्निन्द्रपञ्चशरमुल्वणकर्णिकार
मुच्चैरिदं हि मधुवासरमाविरासीत् ॥

(अहो रमणीयता वसन्तस्य । )

मन्दम्मन्दं मलयपवनो मल्लिका सूत्रधारः
पायं पायं मधुपरिमलं पाटली कुड्मलानाम् ।
मध्ये मध्ये विरचितगतिर्माधवी मण्डपानां
क्रीड़ाखेदं हरति शनकैः क्रीड़या सुन्दरीणाम् ॥

(अहो सार्वत्रिकता प्रेमाऽनुबन्धस्य ।)

उद्दामगन्धकुसुमस्मितशालिनीना
मुद्यानचूततरवो नवमालिकानाम् ।
आपूरयन्ति मकरन्दरसैः स्वकीयै
राकल्पितं कुसुमपांसुभिरालवालम् ॥

(अन्यतोऽवलोक्य सकौतुकम् ।)

अङ्गारश्रियमातनोति नितरामापाटलं पल्लवं
धूमश्रेणिविड़म्बिनी पुनरसौ निर्याति भृङ्गावली ।
पुष्पाख्यतं च संलुठन्ति कतिचित्स्पृष्टानि मन्दानिलैः
शङ्के दग्धुमसौ जगन्ति मदनः सन्तापयत्याशुगान् ॥

अतिचिरस्थायी वैराऽनुबन्धः स्थावराणामपि तथाहि ।

पादताड़नमशोकपादपा-
श्चिन्तयन्त इव हन्तमङ्गनाः ।
मन्मथाय महनीयसौरभा
नर्पयन्ति खलु हन्त सायकान् ।

साश्चर्य्यम् । सर्व्वङ्कषाणि खलु कुसुमशरचापविजृम्भितानि यतः ।

हालास्वादकषायितैर्मधुलिहामालापवत्यः स्वरै-
रन्तःपल्लवजृम्भमाणसुमनः सन्दोहमन्दस्मिताः ।
उन्मीलन्मकरन्दघर्मसलिलैरुत्कण्ठकाः केसरै-
राक्रीड़नववीरुधःक्षितिरुहैराक्रीड़वाटीं गताः ॥

(सर्व्वतोऽवलोकयन् वसन्ताऽतिशयमभिनीय ।)

निद्रितरसालगन्धै
मुद्रितकलकण्ठमुग्धसँल्लापैः।
क्लिन्नैः केवलमदनैः
समयैरस्यन्दचन्दनसमीरैः॥

पुरोऽवलोक्य। कथमियमनवरतविहरमाणवरयुवतिचटुलचरणमणिकटकरणितमुखरसौधवीथिकाराजधानी। इयं हि।

अनङ्गब्रह्मतन्त्राणा
मङ्कुरार्पणमेदिनी।
कमलाकान्तयुद्धान्त
केलिचङ्क्रमणस्थली॥

विभाव्य शतमखनगरीमप्यतिशेते सकलगुणनिकरसङ्कुलशाला काञ्चीपुरी। जलनिधिसमाहृतकतिपयजलमानुषीमुखविकासवञ्चितचपलजनचित्तायास्तस्याः कियती गरीयस्ता। अत्र हि।

परिचयविशुद्धवीणा
वेणुन्दङ्गादिवाद्यविस्ताराः।
विख्यातरसिकविद्याः
सर्वे स्वयमेव सिद्धसङ्गीताः॥

अपि च।

तत्रैको मघवानिह द्विजगणाः सर्वेऽपि रम्भापरं
मान्यास्तत्र परःसहस्रमिह ताः कान्तोरुकाण्डैर्जिताः।
तत्रैको हि गुरुः कविश्च बहवस्तेऽप्यत्र बर्हिर्मुखाः
पौरैश्चन्द्रमुखैः किमत्र सदृशा मन्ये किमन्यैर्गुणैः॥

सकलनगरसाधारणी किमस्याः सकलसुरनिकर तोषकारिणी गुणश्रेणी । तथा हि

इह मखशतनिष्ट ब्रह्मयोनिः
स च पुनरत्र समुत्थितो मुकुन्दः ।
अमुमिह कलयन्ति येऽपि धन्याः
पुनरयमत्र ददाति वाञ्छितानि ॥

पुरोऽवलोक्य । सकौतुकोल्लासं सन्ततविरचितचटुलपवनेन वेपमानमकरध्वजपटपल्लवसमुल्लसितविटंकवाटिकाविघ्नकटमणिगणखचितवेदिकाविहरमाणविविधविटनिचयविचार्य्यमाणसाङ्गानङ्गतन्त्रविस्तारा बालकजनपरिचीयमानपरिवादिनी डमरुमृदङ्गमुरजझर्झरीमुखरसुधाधौतविविधधवलमन्दिरनिकुरम्बनिर्जितनीहारहारहिमगिरिदिगम्बरसितरोचिरम्बरसरिदम्बुकम्बुशरदम्बुदकुमुदकुन्दा वसन्तवीथी । सप्रत्यभिज्ञम् । शृङ्गारपद्या निषद्या खल्वियं वीथी इह खलु ।

कतिच न निवेश्य कामिनीनां
मृगमद सौरभमेदुरे कपोले ।
मुकुलितनयनं मुखानि धन्या
निधुवनसम्भिषु निर्व्विशन्ति निद्राम् ॥

सवितर्कम् । अत्रैव खलु सुहृदनङ्गशेखरकलत्रं

चित्रलेखा तावदेनां विलोकयन्ननुनैव मार्गेण गमिष्यामीति वीथीं प्रविश्य । पार्श्वतोऽवलोक्य । सकौतुकं सफलमद्य संजातञ्चक्षुः ।

पश्चात्पीठनिषण्णया नखमुखैः पर्य्यायतः कुंचितै
र्विस्रस्ताम्बिनिकीर्य्य केशकबरी माबद्धसीमन्तया ।
सख्या साकमुदीरितस्वजननीसंभोगवार्त्तासुधा
बाला सौरभशेषचन्दनवती बालातपं सेवते ॥

निर्वर्ण्य ।

शशधरमणिमालं चंद्ररेखाऽभिरामं
ललितपुलकजालं लक्ष्यविन्दुप्रवालं ।
वपुरनघममुष्या वक्ति कस्याऽपि यूनः
सुरतकलहलीलासूक्ष्ममार्गाऽभियोगम् ॥

कुशला खल्वेषापि कुसुमशरगोष्ठीषु । (साश्चर्य्यम्)

मधुकरपरिभवकातर
मासीदरविन्दमाननन्तन्व्याः ।
अह ह विधिदुर्व्विपाक
स्तत्र च परिभूतमलकरूपैस्तैः ॥

तावदेनामनुसृत्य गच्छामः । उपसृत्य पटान्तरे स्थित्वा ।

प्रत्यग्रचन्द्रलेखं
परिमलशेषाङ्गरागरमणीयम् ।
अव्यवधानमनोहर
मङ्गमवजयतु मदनसर्व्वस्वम् ॥

किम्ब्रवीषि । किम्ब्रवीषि । धन्यः खलु भवा न्नवमालिकासङ्गेन तत्र चाटुकरणेनेति रम्भोरु मैवं वादीः ।

अन्तः कुजद्दुदारकंठमसकृन्मुञ्चेति लोलेक्षणं
प्रायः स्मेरकपोलमूलमम्टतप्रस्यन्दिबिम्बाधरम् ।
आधूतांगुलिपल्लवाग्रमलमित्यानर्त्तितभ्रूलतं
पीतं येन मुखं त्वदीयमबले सोयं हि धन्यो युवा ॥

किंब्रवीषि । गच्छ गच्छ विदग्धः खलु भवान् व्यवहारविद्यास्विति ।

गाढपीड़ितपरस्पराधरं
कण्ठगर्भितकपोलकूजितम् ।
अल्पावरणमात्तसीत्कृतं
विस्मरामि किमु ते रतोत्सवम् ॥

त्वयैव गन्तव्यमित्युक्ते तावद्गच्छामि । पदान्तरङ्गत्वा । साऽश्चर्य्यम् ।

स्थित्वा विचित्रमणिशालिनि रत्नपीठे
फाले गृहीतमुकुराकरपल्लवेन ।
कालेयपङ्कतिलकं परिकल्पयन्ती
कैषा समुन्मिषति का च न कातराक्षी ॥

निर्वर्ण्य । सप्रत्यभिज्ञम् । आः परिज्ञातमनङ्गचन्द्रिकायाः कनीयसी कतिपयकालमस्मा

त्वरिरम्भकलत्रं तारावली। कथमियमचिरात् सम्पन्नयौवना जाता। तथा हि

आयाति भ्रियमञ्जनलयनयो रम्भोरुहप्रेयसीं
सन्नाहः स्तनयोरयङ्कयते सम्भोगयोग्यान्द्याम्।
वैदग्धेन सहाऽऽसिकाम्वितनुते वाचामियं प्रक्रिया
मुग्धायाः पुनरैन्दवीन्न सहते मुख्यामभिख्यां मुखं॥

कथमियमस्यामेव वीथिकायामितस्ततः सञ्चरन्तमपि मामद्य विशेषतः सानुरागन्नालोकयति एनामुपसर्पामि। उपसृत्य खलु कुशलमाकल्परचनायाः।

लोके कलङ्कमयहातुमयं मृगाङ्को
जातो मुखन्तव पुनस्तिलकच्छलेन।
तत्रापि कल्पयसि तन्वि कलङ्करेखां
नार्यः समाश्रितजनं हि कलङ्कयन्ति॥

सादरं किंब्रवीषि। कदाचिद्विशदमतयोऽपि भ्रमन्ति खलु घण्टापथेषु यदस्मदावासदोषेण स्वप्नेऽप्यचिन्तनीयामिमास्वीथीमागतोऽस्मीति। सपरितोषम्। सफलमद्य संजातं श्रोत्रं यदमून्यक्षराणि श्रूयन्ते। कुतः पुनरियं शिक्षिता वैदग्धी यदात्मदोषमन्यत्र समारोपयसि। किमेनन्नसम्भावयसि किन्न पश्यसि मामस्यामेव वीथिकायामनवरतसञ्चारिणं।

अथवा कुतस्ते दोषः प्रेमग्रालिन्याः ।
अपि तु यौवनमदमेदुराया दृष्टेः या पुनरग्रतः स्थितमपि वस्तु न विषयी करोति ।

अपिच । कपटाऽनुरागकौसीदिकः खलु वेश्याजनः । तथा हि ।

आलापैर्मधुरैश्च कांश्चिदपरानालोकितैः सस्मितै
रन्यान्विभ्रमकल्पनाभिरितराटनङ्गैरनङ्गोज्ज्वलैः ।
आचारैश्चतुरैः परानभिनवैरन्यान्भुवः कल्पनै
रित्थं कांश्चन रञ्जयन्ति सुदृशो मन्ये मनस्त्वन्यथा ॥

श्रुतिमभिनीय स्वगतं । आः कष्टमनपराधिनमपि परिजनमतिनिष्ठुरन्निर्भर्त्सयन्ती नीचवृद्धवर्द्धकी समापतति । प्रकाशम् । यदि मनसि न रोचते वयमेव गच्छामः । कुब्जजरतीरूपेण कृत्यामुत्पाद्य किमस्मानुद्वेजयसि ।

सप्रणयकोपम् । किंब्रवीषि किमात्थ रे कितव साधुसम्यगुक्तम् । अयस्कारवाटिकायां सूचीविक्रयवत् किमस्माभिरुपालम्भि । गर्भदासवदलङ्कारमञ्जर्यां दास्यमाचरन्तं भवन्तमस्यामेव वीथिकायां कथन्नाम न दृष्टवती । किमेतेन गतमखिलमाख्यानाम । प्रलपतु जरतीत्वां यत्किञ्चिदत्रैवाऽद्य त्वया स्थातव्यमिति ।

सोल्लासम् । परमनुगृहीतोऽस्मि

श्रमजलपरिमृष्टपत्रलेखं
श्रवणसमाकुलकुण्डलाभिरामम् ।
मुखमिदमुदितस्मितन्त्वदीयं
मुहुरभिवाञ्छति वीक्षितुम्मनो मे ॥

तथाप्यस्याः । कामुकजनमुखकालरात्रेरग्रतः स्थातुमशक्तो गच्छामि गृह्यतामाशीः अथवा किमाशीर्वादेन ते सर्व्वाशिषामुपरि वर्त्तमानायाः । पदान्तरे स्थित्वा । आः कष्टमग्रत एव जरती ।

सक्रोधम् । मामियं पिशाचमुखी तर्जन्यातर्जयन्ती किं प्रलपति ।

रे रे धूर्त्तजन धौरेय दरिद्रचूडामणे कृपणजन मूर्द्धन्यवार्द्धकिनेय भगिनीभुजङ्ग जीर्णशूर्पेण निहत्य निष्काशितोऽपि शङ्काहीनः[पुनरपि]समागतोऽसि । रे मानहीन किमित्थं सुलभा तारावली । किन्न पश्यसि शाल्यन्ध पुत्रकलत्राणि विक्रीय पण्यकलत्राणि परिपालयतो भाग्यपुरुषान् । एतत् किं कुक्कुटोपाध्यायशिक्षितकुटिलविद्यादर्शनस्थानम् । प्रतिश्रुतं धनमदत्वा न गन्तव्यम् । सोद्वेगस्मितम् ।

श्रुतानि श्रोतव्यानि यदि सन्त्यन्यानि कर्णाऽस्य तानि तान्यपि कथय । सक्रोधसंभ्रमं छुरिकामुद्यम्य ।

[शोकहीनइति पाठान्तरम् ।]

अरे नीचदुष्टवर्द्धकि किमुपाध्यायमपि स्पृशसि । तारावलीमुद्दिश्य । पञ्चषाणि परुषभाषितानि सोढानि इतः परं यदि ब्रूयाश्चनया शूर्पणखामिव कृत्वा गच्छामि । गच्छ गच्छ हीनजन देहि मे द्वारं जानासि मे हस्तमिति सधैर्य्यन्निष्क्रम्य । साश्चर्य्यम् । कथमपि कालसर्प्पमुखान्निष्क्रान्तोऽस्मि सखेदम् । अनङ्गवीरक्षेत्रमनयैव दूषिता तारावली ।

सविमर्षम् । कथमस्यामुत्पन्नाऽपि सकलभुवनैक रत्नं तारावली । यद्वा शम्बूकजातिरपि किन्न प्रसूते मुक्ताफलं शुक्तिः ।

कर्णन्दत्वा । किमिह कल कल इव श्रूयते पौराणाम् । पुरोऽवलोक्य । तावदेनामापतन्तीश्चन्द्रसेनां पृच्छामि । सखि चन्द्रसेने कोयं कोलाहलः ।

किंब्रवीषि । चित्रवति चत्वरे शूरसेन वीरसेनयोश्चरणायुधयोर्युद्धं प्रवर्त्तत इति [परमसंभ्रमपरा] भवन्ति पौरा इति ॥

तर्हि वयमपि समागत्य पश्यामः । कथमुपक्रान्तएव ते क्रूरधारचरणशल्ययोश्चरणायुधयोः कलहः सशिरः कम्पम् ।

तुण्डेन खण्डयति तूर्णमुपेत्य वेगात्
पादेन हन्ति परिहृत्य परप्रहारान् ।

---

[ परिमण्डली इति च पाठान्तरम् । ]

पार्श्वे परिभ्रमति पश्यति चाटवकाश
मुन्नम्रचूडमुपसर्पति ताम्रचूडः ॥

अथच

पश्चान्न याति नच याति पुरः प्रमादा
त्पार्श्वन्न याति चरणाऽऽयुधसार्व्वभौमः ।
वामेन केवलमसौ चरणेन गत्वो
मौलौ निहत्य मुहुरुत्थितकण्ठनादः ॥

अपि च

अग्रे पक्ष्मलकेशरामभिमुखं ग्रीवां प्रसार्य्यायतां
लोलत्तारकताम्रलोचनपुटौ रोषाधिकौ कुक्कुटौ ।
चूड़ाखण्डनतीर्णशोणितरणां दुर्वारपचारवं
पर्य्यायेण क्षतोत्प्लुतिप्रहरतः पादैर्निबद्धचुरैः ॥

तदनयोः परस्पराऽतिशायिनोर्जयपराजयौ पौरमुखादेव जानीमः । तद्गन्तव्यमेवास्माभिरविलम्बितमिति कति चित्पदानि गत्वा ।

सकौतुकम् । सफलमद्य जातञ्चक्षुः यदिदानीम् ।

मन्दस्मितम्मधुरकुङ्कुमपत्रलेखं
माणिक्यकुण्डलमनोहरगण्डभागम् ।
मुक्ताकलापपरिमुद्रितकर्णमूलं
मार्गे पुरःस्फुरति मन्मथभागधेयम् ॥

निर्वर्ण्य। कथमियमाकृतिरस्यान्नगर्य्यामितः पूर्व्वन्नदृष्टचरी श्रुतचरी च। तथा हि

कर्णोत्सङ्गविसर्पिणी नयनयोः कान्तिर्वसन्तोत्पलं
लाचासंभ्रमनिर्व्यपेचमधरं लावण्यमेवाश्रुते।
हारोऽस्याः स्मितचन्द्रिकैव कुचयोरङ्ग प्रभाकञ्चुकी
तन्व्याः केवलमङ्गहारमधुना मन्ये परं भूषणम्॥

साश्चर्य्यम्। कथमत्रैव साचाद्भगवती मातङ्गी मतङ्गकुलललामभूता संगीतजन्मभूमिः सकलकलाकलापप्रवीणा वीणावती।

वेणी वेल्लितवालकेन कदल श्रेणी मनोहारिणी
वीणा पर्वसु मीलितार्द्धनयनं व्यापारयन्ती नखान्।
मुक्तावेष्टित कर्णपत्रवलयामुग्धस्मिताटलंकृता
संगीतं वितनोति तत्परिसरे तालानुकारस्तनी॥

तावदेनामायान्तीं कान्तिमतीं पृच्छामि।

सखि कान्तिमति कैषा वीणावत्या सह वीणामुपगीयमाना सीमन्तिनी।

किंब्रवीषि। भाव भवानपि किन्नजानाति। अस्मिन्नगरे वसन्तयाजीनाम कश्चिद्विप्रो वर्त्तते। स कदाचित् पुत्रमवलोक्यास्मिन्नगरेसत्यव्रतचैत्ये पुण्यकोटिच्छायायां भवता यष्टव्यमित्यब्रवीत्। सोऽपि नाहमिष्ट्वा भवता सह सुरनगरवेश्यावाटिकासु कलह-

महापातकमनुभवितुमिच्छामि । केवलमस्यामेव नगर्य्यामेतासु वेश्यावाटिकासु पर्य्यटामीति यच्चार्थं सम्पादितार्थजातमादाय सत्वरमेतामेव वेश्यावाटिकां संप्राप्तइति । साधु विप्रकुमार साधु ।

सम्यङ्निश्चितार्थोऽसि । वारसुन्दरीमुद्दिश्य वषट्कारपूर्व्वकं द्रव्यत्यागमाचरतस्ते यज्ञफलं सिद्धमेव ।

यूनामनङ्गं यजतां विशाला
शाला च लीलागृहचन्द्रशाला ।
गात्राणि पात्राणि विलासिनीनां
भव्यश्च वेदी मणितानिमन्त्रा ॥

ततस्ततः । किंब्रवीषि अथैषा तस्य धर्म्मपत्नी-प्रतिव्रतानां पत्त्युरनुसरणमेव परमो धर्म्मइति स्वयमप्येतां वेश्यावाटिकां प्रविश्य वसन्तकलिकानाम भूत्वा वेश्याधर्म्मेण वर्त्तत इति । सपरितोषम् । तर्जनी माधूणयन् साधु बुद्धिमति साधु सत्यं धर्म्म-पत्न्येवाऽसि । सद्य एव पत्युरनुसरणफलं प्राप्ता-ऽसि । यच्छ्रोत्रियगेहेतालविधीयमानस्नानोपवासा-दिविविधदुःखभाजनमात्मानमविधाय मनोरमान्भो-गाननुभवन्ती सुखेन वर्त्तसे । तावदेनामुपसर्प्पामि ।

सकौतुकमुपसर्प्यन् । सविनयमुत्थाय वीणावति

किंब्रवीषि। तिष्ट तिष्ट महाकुलीन तत्रैव स्थित्वा यदि कथय कथनीयं नाहमुत्सर्पणयोग्या दुष्कुलेति।

सखीदक्किंब्रवीषि। ब्रह्मसूत्रमवलोक्य स्वगतम् रे महापातकिन् किमत्राऽप्यस्मान्पिशुनयति। प्रकाशम्।

को नाम कुलदोषः स्त्रीरत्नस्य
किन्तश्रूयते स्त्रीरत्नंदुष्कुलादपीति।

सखि वीणावति वसन्तकलिकामुखमवलोक्य भूयोऽपि किं ब्रवीषि। न केवलमेतावत्प्रियसखी पुष्पिणी चेति परित्याज्या किं मधुपद्वत्तीनाम्। इत्युपसृत्य। किमस्माकमप्युपालम्भः वसन पल्लवेन कुचकलसमाच्छाद्य सरभसमुत्तिष्ठन्तीं वसन्तकलिका मुद्दिश्य।

तिष्ठ तिष्ठ तथैवाऽस्तु युष्मामुद्वेजयतुं किमदागमनम् ( निवर्ण्य सोल्लासम्। )

नग्नद्वलितयनवीक्षतरोमरेखं
वचोजभारवहनासहमध्यभागम्।
उच्छासिनी विहननन्तव तन्वि जीया
द्दुत्थानमुन्नतनितम्बनिरुद्धवेगम्॥

पुनर्न्निवर्ण्य।

पादद्वयञ्च तवः पल्लवनिर्विशेषं
वक्त्राञ्च वञ्चितम्टगाङ्कमिदं त्वदीयम्।

कर्णान्तिलङ्घिनयनं कमलाऽभिरामं
त्रैलोक्यमोहनमिदन्तव रूपमेव ॥

साचीकृतस्मितं कलत्राऽऽचारो वा कामचारो वा यत्किञ्चिदस्तु त्वयाऽहं विहर्त्तुमिच्छामि । किं ब्रवीषि । भवतु यः कश्चिदाचारः महापुरुष पुष्पिणीति जानन्नपि किमेवं ब्रवीषिति । सवितर्कम् ।)

पण्यस्त्रीषु परस्त्रीषु पुष्पदोषो न विद्यते ।
न तासु कुलदोषो वा कुलस्त्रीणान्तु तावुभौ ॥

तत्पुष्पिणीगमनं धर्म्म एव । किं ब्रवीषि । तत्तवैव धर्मो नास्माकं गच्छ गच्छ सर्वतः संचरन्ति राजपुरुषा इति । स्वगतं सुब्राह्मणि किमद्यापि ते धर्माऽनुरोधः । प्रकाशम् । किमस्मान् राजापुरुषव्यपदेशेन भीषयसि यथेष्टं कथ्यतां । यदि रहस्यं वयं साधयामः ।

वीणावति वसन्तकलिकामपवार्य्य । किं ब्रवीषि सुविदग्धजनमूर्द्धन्य किमन्यत्कथ्यते रहस्यं भवन्तमेषा बद्धाञ्जलिर्विज्ञापयति श्वः परश्वो वा मयि स्नातायामागन्तव्यमिति । सानन्दम् । यदि प्राणवन्तो वयमनङ्गव्यथां निस्तीर्य्य सत्यमागच्छामः । सवितर्कम् ।

कामुककालभुजङ्गी कन्दर्पोद्यानसारङ्गीम्।
कथमिह कनकनिभाङ्गी मेनामंगीकरोमि तन्वंगीम्॥

वीथीमवतीर्य्य। (परिक्रामन्पुरोऽवलोक्य। स कौतुकम्) विकटपदविन्यासमुखरलोहनूपुरः कर्णलम्बमानधत्तूरकुसुमः कक्षनिहितभुजङ्गपेटिकः करकलितकालायसवलयजातो विविधौषधरसकषायगन्धिकलेवरः साटोपरचित विविधदेशभाषा-[भयङ्करः] कश्चिदाहितुण्डिक इतएवाऽभिवर्त्तते। (साश्चर्य्यम्)

करेण बद्धौषधकङ्कणेन कृताञ्जलिः सन् गुरवे नरेन्द्रः।
विभावयन्नात्मनि वैनतेयं भुजङ्गमाकर्षति पेटिकायाः॥

सभय कौतुकम्

फूत्कारमुद्गिरति भूतलमेव हन्ति
मूर्ध्ना मुकुन्दपदपङ्कजमुद्रितेन।
भोगे हतः पुनरुदञ्चितपूर्व्वकायः
कोपेन पश्यति नरेन्द्रमहो भुजङ्गः॥

भुजङ्गन्निर्वर्ण्य।

अयि भुजगमहेशो भूपितस्त्वत्कुलीनै
रपि वहसि धरित्रीमात्मनो मौलिभागे।
किमपरमिह लक्ष्मी कामिनस्त्वं हि शौरेः
सुरतकलहलीलासाक्षिणी केलिशय्या॥

---

[मुखर इति च पाठान्तरम्।]

२

( तावदेनं मोचयामि ) भो भो माहेश्वर भुजङ्गोपजीविन् ।

कण्ठे हारो मणिविलसितः कङ्कणं च प्रकोष्ठे
मञ्जीरश्रीश्चरणकमले मालिका मौलिभागे ।
शम्भोरित्थं सकलमपि सद्भूषणं पन्नगोयं
भूयोऽप्यासीत्त्रिपुरविजये प्रस्तुते चापमौर्वी ॥

तदेवं युष्मत्स्वामिनः परिकरभूतस्ततो मुच्यतामयं महानागः । यत्किञ्चित्पारितोषिकन्ते दास्यामि । (आकाशे लक्ष्यं बध्वा) किंब्रूथ । न मोचनीयोयमस्मद्रोमावलीकान्तिचौरो भुजङ्ग इति । (सोत्रासम्) स्वभावः खलु भवतीनां भुजङ्गनिरोधः तद्बध्यतामयञ्चौरः । शैशवेऽपि साधारणस्त्रीणामसाधारणी खलु व्यवहारवैदग्धी ( पदान्तरङ्गत्वा ) कथमत्रैव कन्दुकविहारमातनोति तरलहारा हारावली एषा खलु ।

बध्नाति केशनिचयं श्लथमाल्यबन्धं
स्थाने निवेशयति भूषणमन्तरन्तः ।
कालेयपङ्कतिलकञ्च करोति [फाले]
चित्ताश्रयापि मणिकन्दुकताड़नानि ॥

---

[ भाले इत्यपि पाठः । ]

गोमूत्रिकासु कुरुते भुजगस्य लक्ष्मीं
चक्राकृतिं भजति मण्डनकल्पनेषु।
रेखाकृतिं व्रजति संप्रति वीथिकासु
चित्राणि हन्त मणिकन्दुकचेष्टितानि॥

तावदनया संलपामि। अनवरतं हारावलि मुखकमलमाघ्रातुमुत्पतत्कन्दुकं। किन्ताडयसि। किं ब्रवीषि। भवादृशोचितं वदनकमलमाघ्रातुं कोसौ पतितद्रति। साधु हारावली साधु। चिरं निर्वर्ण्य।

संवीक्ष्य कन्दुकविहारसमाकुलाया
धन्यान्यमूनि मणिकुण्डलताण्डवानि।
तानि स्मरामि तरलाक्षि निरङ्कुशानि
भोग्यानि ते सुकृतिभिः पुरुषायितानि॥

किंब्रवीषि। नायमवसरस्ते नर्मालापस्य गच्छ गच्छ कन्दुकविहारस्य किमन्तरायोऽसीति। तर्हि गमिष्यामि। (पुरोऽवलोक्य सपरिहासम्)

कक्षे वहन्नकिमपि पुस्तकमात्तदण्डः
प्रत्यङ्गुली विवरभासुरदर्भजालः।
कोप्येषजीर्णवसनः कुटिलोर्ध्वपुण्ड्रो
वेश्याग्टहं विशति निस्त्रपमग्रजन्मा॥

सपरिहासम् समस्तपौरजनस्वस्तिवाचको दाक्षिणात्यो देवराजभट्टोयमुत्तमदानार्थं परिभ्रमति। (सखेदम्) अयमित्थं संचिनोति अस्य भार्य्यातु सर्व्वमन्यस्य दत्वा व्यभिचरति (स्मृतिमभिनीय)

हर्म्याग्रेष्वनु कलघट्टितो रटद्भाणा
माक्रन्दन्निव हरिताश्च सन्निबध्नान्।
निर्वेलः कथमपि निर्गतो गवाक्षा
द्वीथीषु प्रसरति पौरघोष एषः॥

परितोऽवलोक्य। आः कष्टम्

पलायन्ते केचित्पथिशिथिलधम्मिल्लवसनाः
प्रलीयन्ते केचिद्भवनवलभी भित्तिनिकटे।
पतत्यन्ये भूमौ भयपरवशैरं ध्रिभिरमी
मनः कम्पं धत्ते मम च तव कश्चिद्व्यतिकरः॥

किन्निमित्तमिति तत्वतो न कश्चिज्जानाति। केवलं सर्वे धावन्तमनु धावन्ति। ससम्भ्रमम्। करसंज्ञया कलकलन्निवार्य्यतोत्वमादाय त्वरितमाधावन्नाधोरणः क्रुद्धः किं ब्रवीति। रे रे पौराः पलायध्वं गन्धद्विपो गन्धद्विप इति। (सभयकौतुकमग्रतोवलोक्य)

मन्दं प्रयाति मदविह्वलमोघमाणो
मार्गे परिभ्रमति याति निवृत्य भूयः।

वेगेन धावति विलोक्य जनं पुरस्ता
द्धावन्परिभ्रमति गर्जति गन्धहस्ती ॥

आकाशे सभयकौतुकम् अग्रतोऽवलोक्य लक्ष्यं वध्वा मदनमञ्जरि किं ब्रवीषि । सोयं कुञ्जराऽपसदः। किमस्मानुपधावतीति । सोत्प्रासम् ।

कुचकलशविलासैः कुम्भलीलां वहन्तीं
विरचितकरशङ्कामूरुणा मन्थरेण ।
मदपरवशमस्मिन्नुत्वरे सञ्चरन्ती
मनुसरति गजस्त्वामात्मनो हस्तिनीति ॥

सोद्वेगम् ।

सन्निगृह्य चरणेषु नोदनात्ताडयन्भुवि पलायितपौरान् ।
कन्धराकषणकम्पितसौधा मस्मसीपमुप सर्पति हस्ती ॥

ततः स्थातुमयुक्तमस्माकम् ।

कुपितं च महीपालं कुञ्जरं च मदालसम् ।
अतिदूरे परित्याज्य मामनन्ति मनीषिणः ॥

साश्चर्य्यम् । अस्य निरङ्कुशाविहारिणः पुरतः स्थित्वा किमपि भावयन्नाधोरणद्वन्द्वः किं ब्रवीति । रे रे निषादिनः सिंहपटः शृङ्खलः सिंहमुद्रया तावदेनं स्थिरीकरोमि निगृहीतमागत्य दन्तयोः सिंहपटं सङ्कलय्य शृङ्खलया चरणयोर्निवध्य च

निःशंकमारुह्य कारागृहं नीयतामयं दुष्ट-गजइति साधु मान्त्रिक साधु।

कुम्भेन कुचसौभाग्यचोरमेनं स्तगीदृशाम्।
युक्तं कारागृहन्नेतुं कृत्वा निगलबन्धनम्॥

कतिचित्पदानि गत्वा श्रुतिमभिनीय। सादरं शिरस्यञ्जलिं घटयन्।

दृप्यद्दानवदोर्विवर्त्तितमहामन्थानशैलस्थली
घोराट्टघातविघूर्णदर्णवपयः कल्लोलकोलाहलः।
श्रीमत्कुञ्जरशैलशेखरमणेर्देवस्य काञ्चीपते
र्मन्दं मन्दमुदञ्चितोयमधुना मध्याह्नसंखारवः॥

सरभसमुद्धृत्य चरणमूर्द्ध्वञ्चाऽवलोक्य। कथमय-मिवलम्बितमम्बरतलमध्यवर्त्तीसम्वृत्तो विकर्त्तनरथः अद्य खलु।

विदलयति शिरो मे भानुरूर्द्ध्वं मयूखै
र्दति पदमधस्तान्मेदिनीपांशुजालैः।
इयमिदमतिभीतं दृश्यते दुर्निवारं
मनसि यदयमुच्चैर्जृम्भते मन्मथाग्निः॥

पुरोऽवलोक्य। महानयमुत्सवो लोचनयुगलस्य यदिदानीम्।

बलान्नूपुरमञ्जुनादमुखरं निर्गत्य लीलागृहा
दुष्णस्यन्दिकुरङ्गनाभितिलकैरुद्भासिफालस्थलाः।
क्रीडाकृष्टनवातपत्रमतुलं चेलाञ्चलैरुच्छ्रितै
र्मन्दं मन्दमिमाः प्रयान्ति सुदृशो मध्याह्नसेवोत्सुकाः॥

सनिर्वेदम्।

अम्भोजबन्धुरिति भानुमिमाञ्चभूमिं
सर्वैंसहेति कथयन्ति मृषैव लोकाः।
वक्त्राम्बुजं ग्लपयति प्रथमो वधूना
मासां परा न सहते चरणार्पणञ्च॥

कथमस्मत्प्राणाऽपहारिणी हरिणी। किं ब्रवीषि धूर्त्तत्वमातपेतावद्गच्छ विश्राम्यतांगृह एवेति सोत्प्रासम्। त्वदर्थमनुभूतकामानलस्य मे कोयमातपो नाम। श्रुतिमभिनीय। व्याकुर्व्वन्नु- पाध्याय इव श्रूयते रेवती चन्द्रशालायां तदयुक्त- मुपाध्यायमतिक्रम्य गन्तुम्। एवमुपसंगृह्य याव- दावर्त्तते वासरो गच्छामि। (एकहस्तमुत्तंसयन्नु- पाध्याय नमस्ते।) किं ब्रवीषि। अनङ्गविद्यापार- ङ्गतो भूयाः क्षणमिहास्यतां विहितो भवान्समीचीन एवावसर इति। यदाऽऽज्ञापयन्ति गुरव इत्युप- विश्य कोयमवसरो व्याख्यानस्य व्याख्याताः किं जाति-

भेदाः व्याख्याता किमर्द्धचन्द्रादिवैचित्री किं विन्दुविन्दुमालयोरन्तरमालोचितं किमुत्तानुत्तानकरणादीनि । दत्ता किं चीर नीरयोस्तिलतण्डुलयोर्विवेके दृष्टिः । दृष्टं किमष्टविधमौपरिष्टकं किं ब्रवीषि । शेखरः खलु भवान् शृङ्गार-विद्यायाः । तात व्यतीतः खल्वसरस्तेषां पटच्चूर्णीकृतं तत्सर्वमेतैर्द्विजमूर्द्धन्यैः । इदानीं सकलसुखसाचात्कारचमलक्ष्मीप्रभृतिभिरिदमेव सेव्यत इत्यस्यैव सर्वातिशायित्वात्तन्मोक्षे परमं सुखं निर्वाणं हि महत्सुखमित्यादिभिरभिनवयौवनमदललितकामिनीनितम्बविम्बसुदुकूलमोचभाविसौख्यमेवाऽभिधीयत इत्यस्यैव स्वसंवेद्यपरमानन्दस्वरूपसुरतसौख्यस्य मोक्षसुखत्वं प्रतिपाद्य तदनङ्गोपासनमन्तरेण नघटत इति वादाः क्रियन्त इति । (सानन्दं शिरः कम्पयन् ।)

शतमध्यस्तु कर्णानां सहस्रं वास्तु चेतसाम् ।
तथापि त्वदुपन्यासं कः पुमानवधारयेत् ॥

तर्हि शान्तस्त्वायमातपः साधयामि । मन्मुखेन वसन्तसेना भवन्तं विज्ञापयति भवद्भिरपुरपागन्तव्यं

वासन्तिकारथोत्सवायेति नाटितकेन सौधादव-तीर्य्य । (परिक्रम्य पुरोऽवलोक्य ।)

कक्षावबद्धकृशोदरेण वपुषा खड्गं मुहुः कम्पय
न्शिक्षाभेष गतागतैः प्रकटयन् शस्त्रग्रहे भूयसीम् ।
व्याकुर्वन्निज वीरवादमधिकं विस्तीर्णवक्षस्थलो
वीरः कश्चिदलंकरोति विशिखां वीरैरनेकैर्वृतः ॥

ससंभ्रमम् । कलकलानुसारी पृष्ठतोऽवलोक्य । कथमत्राऽपि

बलान्मुकुजय जयेति वदद्भिरुच्चैः
पौरैर्वृतो विजयडिण्डिमचण्डनादः ।
मौहूर्त्तिकेन निवृतस्मरणात्कथञ्चित्
खड्गी समालपति कश्चिदुदारवेशः ॥

कथमेतज्जानीमः । तावदेनं पृच्छामः । सखे रङ्गनाथ किन्निमित्तमेतयोर्व्यतिकरः किंब्रवीषि । किमन्यन्निमित्तोयं गणिकामन्तरेणेति । सबहुमा-नम् । तर्हि युक्तमेव साखल्वेषा भवता दृष्टस्य प्रातिवेशिकस्य कुवेरनाम्नो वणिक्श्रेष्टस्य कनिष्ट-दारा तारावली वशीकृता । किं ब्रवीषि । विदग्धः-खल भवान् वशीकरणविद्यासु त्वदुक्तोपायेन वशी-

कृतैव तथापि सा किं करोतु वराकी गुरवः खलु निगडं कुल स्त्रीणां । तथा हि ।

कार्य्येणाऽपि विडंवनं परम्हेष्यमूर्न संमन्यते
शङ्कामाचरयन्ति यूनि भवनं प्राप्ते मिथो यातरः ।
वीथीनिर्गमनेपि तर्जयति च क्रुद्धा ननान्दा पुनः
कष्टं हन्त म्टगीदृशां पतिग्टहं प्रायेण काराग्टहम् ॥

किन्नाम दुष्करं दैवस्य । सा कदाचिदभिनव-जलदसम्भारगम्भीरे सायं परिभवति भुवनमन्धकारे मयि च भुक्ता ग्टहीत ताम्बूले पर्य्यङ्कमारोहति सा वरारोहा हि कच्यायां वसन्ती पद्यामिदं पठितवती ।

नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्ता नामाह पुष्पिणीति गुरवः प्राप्ताग्टहाभ्यन्तरम् ।
शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते
स्वामिन्नागमलालनीयरजनीं लक्ष्मीपते रक्ष माम् ॥

इति श्रुत्वा लब्धाऽवकाशा मामेव प्रार्थयते चिरकालप्रार्थिता वरवर्णिनी दुकुलोत्तरीयमुत्सृज्य समुल्लङ्घितप्राकारे मयि विशति ग्टहाऽभ्यन्तरम् ।

हस्तेनाकुलकङ्कणेन ललितं केशेषु मां ग्टह्णती
शय्यायां विनिपात्य रे शठचिराल्लब्धोसि दैवान्मया ।

त्वामद्यैव निहन्मि धूर्त्त चिकुरं मुञ्चेति संलापिनी
श्वेटाभि स्वलकुण्डलाभिरुपरि क्रीड़ां वितेने वधूः ॥

पर्य्यायेण पराक्रमं विदधती पर्य्याकुलैः कुन्तलैः
श्रान्ता वक्षसि मालिकेव पतिता सम्मीलितार्द्धेक्षणा।
मा मा मुञ्च रतान्निमर्द्दय समारुह्येति दीनाक्षरं
जल्पन्ती श्रमाकुला रसवती भुक्ता मया कामिनी ॥

सचङ्क्रमामं तर्जनीमाघूर्णयन्। सखे साधु शृङ्गारशेखरस्य मितमसि शृणु तावदेनामपि कथां कति कति वा न सन्ति भुवि कामिनीरूपाणि रत्नानि। कदाचिदहं रङ्गराजाऽभिवन्दनाय रङ्गं नगरीङ्गतवान् तत्र कदाचिदम्बरतलविहरदमरपुरयुवतिकरकमलगलितमन्दाकिनीकरकारविन्दसन्दोहकातरमधुकरनिकरावलोकिते क्षीणतेजसि चरमगिरिशिखरमवतरति बन्धुकबन्धुरे कमलबन्धौ मन्दमन्दमपहृतयुवतिमाने मदनकृतवङ्क्रमाने वलमाने मलयगिरिपवमाने पण्यवीथिकायां जातिचम्पकादिपुष्पाणि तरुणकेतकीदलद्राघीयांसि ताम्बूलीदलानिच समादाय चमत्कारिभिरुदारवेषैरशेषभाषागीतिनीतिचतुरैः साट्टहासमन्योन्यमाकाल-

तकरतलाऽऽस्फालनैः पीठमर्दविटचेटविदूषकप्रायैः कतिपयैःसवयोभिः सहमपि चरति वेश्या वीथ्याम् ।

सौधस्थले चरन्ती चरणसमालोलचारुमञ्जीरा ।
कापि कमनीयमूर्त्तिः कनकशलाकेव कामिनी दृष्टा ॥

सपुलकोत्कम्पम्। तत्स्मरणमद्याऽपि मां व्यामोहयति ।

तिष्ठन्तु सर्वेऽपि तदावयस्तोन्मुहुर्मुखालोकनबद्धतृष्णाः ।
मुहूर्त्तमन्तः कलहायमानाः परस्परं सम्मीलिताः कटाक्षाः ॥

वयस्य किं तवापि गोप्यमस्ति। ततः कथञ्चिन्निवासमागत्य ताम्बूलादपि विषतरुपल्लवानिवहुमानयन् आहारादपि हालाहालमात्माऽनुरूपमाकलयन् निष्ठुरप्राणभाराऽऽक्रान्ततया शरीरमपि धारयितुमक्षमः प्रतिक्षणमतिविह्वलःकलामात्रमपि कल्पकोटिवदतिवाहयितुमभिनिवेशेन तेषु तेषु मनोहरेषु दीर्घिकास्थानेषु धाराहृष्टिर्गतधन इव पिशाचाविष्ट इव तिरश्चामपि दयनीयावस्थः परिभ्रमन् ।

वीणावादन गोष्टिकासु विरूयन्वाणीम्मधुस्यन्दिनीं
क्रीडासौधगतानि तानि कलयन्दृष्ट्वा च हंसीकुलम् ।
कोकद्वन्द्वविलोकनेन कुचयोर्युग्मञ्च तस्याः स्मर
न्नक्वापि स्थितिमन्वभूर्वमिति तच्चिन्ताकुलः सर्वदा ॥

एवमति क्रामति काले कदाचित्किल विरहिजनमीनग्रहणार्थमुन्मृष्टकनकसूत्रानुकारि संहरति धीवर इव सवितरि किरणजालमपरपद्मपाकर इव दिने दिने चीयमाणो विरहवेदनानिवेदनोचितं कमपि जनमनालोकयन्नपारशोकसागरनिपतितो निस्तारमपश्यन्, तस्या गूढ़पातकिन्या वार्त्ताश्रवणोपायमप्यजानन्मानमन्तरेण कागतिरस्माकमिति निश्चित्य हृदयगतप्रेयसीस्तनभरनिःसह इव भङ्गुरमात्मानं कथङ्कथमपि धारयन् विरहविसंस्थुलैः पदैर्नेदीयसि निर्जने जीर्णमातृगृहे कर्पूरलिकुचपाणिरवतस्थुषम् । अत्रान्तरे कापि कापालिकलिङ्गधारिणी कः कोत्र देवीगृह इति ससम्भ्रममधिक्षिपन्ती प्रविश्य देव्या वामभागेकरतलगलित कर्पूरलिकुचफलमवनितलपतितमज्ञातकेशावसनमतिकष्ले महति वाष्पपूरे स्रवमानमवलोक्य तां दारुणामवस्थां स्वयमप्यऽनुभवन्तीव कराभ्यामुत्थाप्यमानैस्त

रूपायैराख्याख्य कुतः कोभवान्किमर्थमेतादृशीमव-
स्थामनुभवसीति मामप्राचीत्। ततः कथञ्चयमपि
निरुध्य कण्ठरोधिवाष्पम्। अम्ब निष्कारणवत्-
सले तदिदं परीवाहः खलु कूलभेदिनो महातटा-
कस्य। यदन्यस्मै निजदुःखनिवेदनं श्रूयतान्ता-
वत्। सोऽहं काञ्चीपुरनिवासीगर्भैश्वर्य्यदुर्ललितः
पित्रा सह कलहायमानो वात्सल्येन पदपतितां
रुदन्तीं मातरमप्यवधूय श्रीरङ्गराजदर्शनार्थमिमा-
न्नगरीमप्रविष्टः। कदाचिदस्ताचलशिखरचुम्बिनि-
रविबिम्बे बिम्बत्विषि सोऽपि कैश्चित्सवयोभिः सह
वेश्यावीथिकामापतन्नहमेव कस्याश्चिद्गूढपातकिन्याः
कटाक्षवागुरिकावलयपतितः फलमेतादृशमनुभ-
वामि नाद्याऽपि निस्तारञ्च पश्यामीति मयि वदति
सा कार्पटिका किमपि रत्नमादाय सा महापात-
किनी सन्मुखेन भवन्तं विज्ञापयति। नेदं शिला-
शकलमिति मन्तव्यं किन्तु युष्मद्गुणगणक्रीतमस्मा-
स्वेत इत्यर्पितवती। तदहमारचिताञ्जलिः करा-
भ्यामादाय रागपेशलं प्रेयसीहृदयमिव सदाकार
गर्भं सुचिरमालोकयन्नानन्दविस्फारितेन चक्षुषा
तामवोचम्। अम्ब किमित्युपदीयते महामूल्यमेत-

दूतं अश्रुत्वा संदिष्टं निरङ्कुशः खलु महतामुदार-गुणः ।

तथा हि

ताम्बूलञ्च दुकूलञ्च कुसुमञ्चाऽनुलेपनम् ।
भुक्तपूर्व्वमिदं सर्व्वं सन्दिशन्तिन्दगीदृशः ॥

जानाति खलु सम्यगस्य दासजनस्य सेवाचातुर्य्यं कथय तावत् कथं वर्त्तते प्रेयसीति मयि वदति साऽवादीत् । किमुच्यते तात यदा खलु सा भवन्तं दृष्टवती ततः प्रभृति ।

न क्रीडासु कुतूहलं वितनुते नालङ्कृतौ सादरा
नाऽऽहारेऽपि च सस्पृहा नगणायत्यालापलीलां सखीम् ।
बाला केवलमङ्गकैरनुकलच्चामैर्विविक्तस्थले
ध्यायन्तीकिल[किं भवन्तमधुना]निस्पन्दमास्ते सदा

किञ्च ।

शोकाग्निदग्धे हृदि वल्लभो मे
वसन्किमासीदिति दुःखितायाः ।
विलोचनः स्यन्दिभिरश्रुपूरै
विश्वन्नदीमातृकतामयासीत् ॥

न केवलमेतस्याः तापं ब्रवीमि ।

---

[ किञ्चिदन्तरधुनेति पाठान्तरम् ]

सन्तापस्फुटितोत्थितैस्तनतटान्मुक्ताफलै रन्वितं
भस्मीभूतनवप्रवालशयनं पर्य्याकुलैरङ्गकैः ।
निश्वासग्लपितप्रसूनकलिकानिर्विस्मृतभृङ्गीकुलं
तस्यास्तापमनश्वरं कथयते तन्व्या लतामण्डपम् ॥

किञ्चैषा त्वय्यनागतेऽपि सम्पूर्णकामैव तया हि ।

गाढे सत्यपि चुम्बनेन च पुनः क्लिष्टा कपोलस्थली
न क्वापि चातिरीच्यते वक्रतरं दष्टेऽपि दन्तच्छदे ।
आश्लेषेऽपि नपत्रभङ्गरचना वक्षोजयोर्हीयते
भुंक्ते वञ्चितबन्धुवर्गमिति सा स्वप्नोपभोगोत्सवम् ॥

एवं क्रमेण दिवसेषु कतिपयेषु गच्छत्सु कदाचिदहं भिक्षार्थमटन्ती सायन्तनसमये मलयमरुदुद्भूतमाधवीमकरन्दस्यन्दिन्यङ्गणकदलीमण्डपे विरहविसंस्थूलैरङ्गैरनङ्गवेदनारसमनुभावयन्तीव कामपि कदलीमलिङ्ग्य स्थितां दृष्ट्वा झटिति सञ्जातकरुणा रहस्य विजनताञ्च विज्ञाय तामपृष्टवती । जानामि खलु सर्वदा मान्ते विस्रम्भपात्रमिति । तत् किं मुग्धे ममाऽपि गोपयन्ती हृदयमेव मुत्ताप्यसि ।

क्षामं गात्रमतीव पाण्डुवन्दतं क्लिष्टा कपोलस्थली
कोऽसौ चेतसि वर्त्तसे तव युवा लोकैकमान्याकृतिः ।

त्यक्ताकिञ्चिदपत्रपा कथय मे खिन्नासि किस्त्वन्यथा
घोरः पञ्चशरो यदि त्वमवला वक्ष्यामि नातः परम् ॥

इति सा तु कथङ्कथञ्चिद्वदनमुन्नमय्य शुकतुण्ड कुटिलकोटिभिर्नखाग्रैरमनकलुषान्विरहाग्निधूमशकलान् बाष्पविन्दूनादाय वि क्षिपन्तीं मामुक्तवती। मातस्तवापि किन्नामगोप्यमस्ति कदाचिदहं नगराऽवलोकनकौतूहलेन सौधस्थले चरन्ती केनाऽपि कमनीयवेषेण बिलासिना कनकमृगेण जानकीव हृतचित्ताऽस्मि। नाहं नाम जानामि नापि कुलदेशौ अपि तु एतावदेवजानामि।

नवयौवनकुञ्जरस्य मन्ये मदलेखेव मदालसस्य यूनः।
मुखचन्द्रमसः कलङ्करेखा भवति श्मश्रुपरम्पराकपोले ॥

न्यरूपि चास्यभावोऽपि सोयमस्मिन्नगर एव स्यात्। येन हि

परिवृत्यमुहुर्विलोकयन्मां प्रणयस्पन्दिभिरुत्सुकैरपाङ्गैः।
चरणैरगमत्कथं कथञ्चि द्विरहैर्विस्मितमार्गसन्निवेशैः ॥

यदि शक्नोषि तमन्विष्यानेतुं मम प्राणास्तिष्ठन्तीति वदन्त्येवं पादावग्रहीत्! सा च कामिनीनां सन्देशमन्तरेण कामिनो न विश्वसन्तीत्युक्त्वा सकलपुरुषमौलिरत्नाय तस्मै किमन्यत्सन्देष्टव्यमि

त्युत्तमाङ्गान्मौलिरत्नमादाय तमेनमेवं ब्रूहीति दत्वा मां प्राहिणोत् । तदहं दिष्ट्या भवन्तमिहैवोपलब्धवती । सा चेदियता कालेन नूनमुन्मादिनी स्यात् । तद्यथा तद्गुरवो न जानन्ति तथैव तत्प्राणान्प्रतिष्ठापयितुं भवानेव प्रमाणमिति । तदहमाकर्ण्य चणं विचार्य्य कर्णे तामेवमेवमित्युक्त्वा प्राहिणवम् । वयस्य किं नाम दुष्करं प्रज्ञायाः । तज्जनकेन लङ्केश्वरेण विरहवेदनावशेनोन्मादिनीं तामविज्ञाय महाभूतग्रहग्रस्तेऽतिपर्याकुलेनमत्कन्यकाश्रितं महाभूतं यो निवारयिष्यति तस्मै धनाढ्यं प्रयच्छामीति प्रदर्शितेषु विविधमन्त्रतन्त्रेषु सा न किञ्चिदूचे केवलं रोषदहनगर्भया दृशा दहन्तीव तानैक्षिष्ट । अनन्तरन्तु ।

मय्यागत्य गृहीतमान्त्रिकपदे वक्षस्थले गण्डयो
र्विस्रब्धं च तया प्रहृत्य विहरत्याकृष्टकेशान्तया ।
तस्यास्तत्क्षणहासरोषपुलकस्वेदादिकं केवलं
मत्वा तद्ग्रहविक्रियामपि जनैर्माहात्म्यमङ्गीकृतम् ॥

किञ्च

यन्त्वं संहरयामि यामि भगवन् यच्चोहमज्ञानतो
बालामद्य समागतोस्मि सकृदप्येका ममैषा निधिः ।
शून्येमातृगृहे प्रयच्छतु बलिं कन्येति कामग्रह
श्चक्तो छतिममन्त्रवादिनि मयि प्रोवाच सा सुन्दरी ॥

तदाऽहम् । मृषा कल्पितयन्त्रजालको गच्छ गच्छ किं तव यज्ञाऽधमेति तं मिथ्यायज्ञं निवार्य्य विविधभोगदत्ता खलु यज्ञजातिः । तस्मै नमस्कृत्याऽलङ्कृतासकलानि भोग्यवस्तूनि समादायैकाकिनी वलिं दत्वा यज्ञाय शून्ये मातङ्गहे समायातु । तावता सर्वं समाहितं भवतीत्युक्ता प्रीतेन लक्षेश्वरेण दत्तं धनमादाय सन्ध्यासमये मातङ्गहं प्रविश्य क्वचित्तिरोहितोऽस्मि । सपुलकोद्भेदम् । किम्ब्रवीषि ततस्ततइति ततो वयस्य किमन्यत्कथ्यते । फलितं शृणु । साऽपि तथैव मातङ्गहं प्रविश्य । वलितकङ्कणेन करेण कण्ठे मां सलीलं गृहीतवती ।

तन्मयः किमयं बाला मन्मयी किमुभावपि ।
किमानन्दमयोवेति न विज्ञात तया मया ॥
अतिचिरकालप्रार्थित मनितरकथनीयमात्मसंवेद्यम् ।
सुरतं सुखमन्वभूतं विस्मृतसकलान्यवेदनः सुतनोः ॥

तत एवं ब्रवीमि परदारसम्भोगकुपलयोरुचितमावयोः सख्यमिति ॥ किं ब्रवीषि । साधु मन्त्रकुशल साधु । कनिष्ठाङ्गुलौ भवान् प्रतिष्ठावान्, पटुतरगणनासु । वयस्य परयोषितस्तु मदनज्वरन्निर्वापयन्त्यो भूयोऽपि संधुक्षयन्ति ।

सद्यो रागिणि सूचयन्ति हृदयं सापत्नपैर्वीक्षणैः
शङ्केतस्य नशक्नुवन्ति मनसा सङ्कल्पमाना अपि ।
कच्छ्रात्सङ्गमम्युपेत्य गमनं सं प्रार्थयन्ति क्षणा
त्साशङ्काःस्वलिते क्षणेऽपि सहसा मुक्तोपभोगोत्सवाः ।

इति । वयस्य तत्तथैव

दिगन्तानश्यन्ती दिशति नमुखे चक्षुरन्तं
न विस्रब्धं किञ्चित्कथयति न वाऽऽकर्णयति च ।
रतारम्भे भूयो जिगमिषति साशापि सुरते
तथाप्येषा भावैस्तरलयति चेतः परवधूः ॥

तदेवमद्याऽवशोषितमदनमनोरथस्यापि सुकुमुंकुरुत्तङ्गितवक्कलाऽनुरागस्य परयुवतिसंभोगसौख्यस्य षोडशीमपि कलां सुरतान्तराणि नस्पृशन्ति । किंब्रवीषि । एतयोर्वीरवरयोर्द्वन्द्वयुद्धविलोकनाय गच्छामीति । तर्हि गच्छ । सर्व्वदा न विस्मरणीयोऽयञ्जनः । ससम्भ्रम कौतुकम् ।

सङ्गतावपिपरस्परमेतौ
दूर एव [भवतोद्भूत-रं हौ] ।
मङ्गलानि चरतः कृतशिक्षौ
मर्म्माणि प्रहरतो [विहरन्तौ] ॥

---

[ भवतोद्भूतखड्गौ इति पाठोपि दृश्यते ]
[ प्रणदन्तौ इति च ]

किमस्माकमेतेन मलयङ्गच्छतां मन्दरपयोपवर्णनेन । विशिखान्तरं प्रविश्य । महानयं मल्लसंरम्भः । तथा हि

शिक्षा भूमिरुजोरुणां परिदधत्कक्षां भुजे कल्पय
न्नास्फोटं द्विगुणीकृते विरचयन्नग्ये गरिष्ठां गदाम् ।
मूर्ध्नी तत्क्षणमुण्डितेन कपिशां विभ्रञ्चतन्वीं शिखां
मल्लः कश्चन मांसलो विजयते युद्धाय बद्धोत्सवः ॥

दक्षिणतोऽवलोक्य । साश्चर्य्यम् । अयमेव भवेत्तस्य परिपन्थी । यदिदानीम् ।

द्विगुणितभुजाक्षेपक्ष्वेडारवैर्दलयन्नभः
करतलमहीपृष्ठो निर्धूतनिष्ठुरगर्जितः ।
सुदृढमवनीं स्पृष्ट्वा मुष्टिं विधाय पदाहत
क्षुभितवसुधो रङ्गे रिङ्गन्नलक्ष्यत मल्लराट् ॥

सकौतुकम् । कथमेतौ नियुद्धत एव

पादेनाक्रम्य पादं भुजवलितभुजौ तस्थिवांसौ स्थिरांशौ
भ्राम्यन्तौ भ्रामयन्तौ विधृतपरिकरौ पातयन्तौ पतन्तौ ।
भूमेरुत्थाय भूमौ रणमिह कुरुतो मुष्टिमादायमुष्टौ
गर्जन्तौ निश्वसन्तौ घनतरहतिभिर्भिन्नगल्लौ च मल्लौ ॥

वामतोऽवलोक्य । कथमुत्तरोत्तराण्याश्चर्य्याणि यदिदानीम् ।

केलिकम्पितविषाणचामराः
किङ्किणीमुखरपीनकन्धराः ।
वक्रभासुरवराटमालिका
न्नृत्तमत्र रचयन्ति पुङ्गवाः ॥

घोरो नास्ति भुजङ्गमादपि जनैः सोयं समं वर्त्तते
वन्यास्तेपि गजादयो विदधते वार्त्तानुरूपां क्रियाम् ।
वीणा काष्ठमयी च वक्ति मधुरं वाणीं मनोहारिणीं
पाषाणाश्च फलन्ति काङ्क्षितमहो किन्वा न साध्यन्नरैः ॥

वीथ्यन्तरमवलोक्य । महानत्र समरसंरम्भः । कम्पितविषयमवेल्लितविकटतिरश्चीनविषाणभूषायितविविधलोहवलयखलखलत्कारमुखरमुखानां अतिनिशितखुरोत्खातभूतलानाम् अनवरतप्रहरणपरिणतकिणकठिनकण्डूलमस्तकानाम् असोढपरबल-[मधःशीर्षाणां] अगाधरोषाणामेषां मेषाणाम् । तथा हि । पश्चात्परिवृत्त्याऽवलोक्य । सकलसार्वभौमपदमनुभवति चिराय शृङ्गारः । यदिदानीम् ।

दोष्णा चन्दनधूसरेण ललिताम्बुन्वन्ति चित्राङ्गदां
पश्यतक्षणजायमान पुलकः पार्श्वे मुहुः प्रेयसीम् ।
उष्णीषप्रतिबिम्बितैश्च कुसुमैरुल्लासिधम्मिल्लवा
न्नुद्गायन्नुप याति कोऽपि विशिषामुल्लोलवेषो युवा ॥

किञ्च

कलुषितकपोलपाली कस्तूर्या काप्युपैति नेपाली ।

सोत्कण्ठम् ।

कस्येयमङ्कं पालीं सास्यति पुलकैरपास्तनीमालीन्॥

तावदेनामुपसर्पामीत्युपसर्प्य । सलीलम् ।

तरुणि तव कर्णपत्रं शासनपत्रं मनोभुवः प्रङ्कः ।
कर्णप्रसूनमुखरान् कलये तल्लेखवाचकान्भ्रमरान् ॥

सलीलं हस्ते गृहीत्वा कराङ्गुलिपल्लवाभ्यां वदन मुन्नमय्य । कथमियं यथावत्कलभाषिणी ।

मुदितः कदांघ्रयिष्ये मुखमिदमाघ्राय मुकुलितापाङ्गम् ।
मुग्धस्मितं रतान्ते मुक्तातातङ्कमुद्रितकपोलम् ॥

किं ब्रवीषि । कितव किमेतेन धूर्त्तोऽऽलापेन । नश्रुता किं किंवदन्ती च । वेश्यामपि वसन्तरेखा-मस्पृश्य मयूखहस्यामकरोदर्थपाल इति । तदलमे-तेन कुक्कुटाऽऽचारेण ।

नहि नेपालिकाजातिर्दाक्षिणात्यवदनाचारा मृच्च पाणिमिति । साट्टहासम् । जानामि ते पातिव्रत्यमर्थपालशौर्य्यञ्च । पुरोऽवलोक्य । सान-न्दम् ।

कल्हाररचितचूली केलीगमनेन गर्हितमराली ।
कापि नगरप्रतोली मालिभिः साकमागता चोली ॥

स्मरणमभिनीय । सखि मन्दारमालिके सह

कुशलिनी त्वं रागवर्द्धनेन । किंब्रवीषि भाव किमेतेन निर्द्धनरागवर्द्धनेन मातङ्ग इवाऽऽगत्य मार्जार इव निर्गतोऽभूत् इति । तर्जनीमाघूर्णयन् । साधु मन्दारमालिके साधु । कुशलासि खलु कुवेरमपि कौपीनं परिधापयितुम् । सख्यःसमाह्वयन्ति गम्यतां प्रकृतकार्य्याय । पार्श्वमुद्दिश्य । सानन्दम् ।

वलयिनी मणिबन्धे वर्त्तमानं सलील
शुकमुचितवचोभिः स्वैरमालापयन्ति ।
मदहसितमनोज्ञा मन्मथाद्वैतविद्या
मुपदिशति विलोलैरुत्पलाक्षी कटाक्षैः ॥

किमियं पाणिपल्लवेन परामृशन्ती लीला शुकमालापयति ।

रागं मुखे वहसि रञ्जयितुं च वाचा
दक्षोऽसि दर्शयसि मय्यपि पक्षपातम् ।
जाने तथाऽपि चपलं प्रियदर्शन त्वां
बध्नामि तत्करगत मणिपञ्जरेऽस्मिन् ॥

इति विमृश्य मदुद्देश एवायमालापो नूनमेषा न केवलमर्थपरा कामपरा च प्रतिभाति । भवतु गत्वा जानीमः । (पदान्तरङ्गत्वा) स्वस्ति ते शुकविनोदनाय । कथयकलालापिनि कस्य कामिनो भागधेयमुल्लासयति । सप्रणयकोपम् । अपवार्य्य

करभोरु यथार्थवादिनं लीलाम्बुकं कर्णोत्पलेन किन्ताडयसि । किं ब्रवीषि । गणिकाजनगर्हितमध्वानमाश्रयन्ती न कस्याहमुपालम्भपात्रमिति । मधुरभाषिणि मैवमवोचः ।

मान्या त्वमेव हि मनोहररूपवेषे
स्तारुण्यमद्य तरुणैश्चरितार्थयन्ती ।
अन्यैः किमर्थकृपणैर्जड़जीर्णभोग्य
तारुण्यसंपदुदयै क्षुद्रयां समूहैः ॥

किं ब्रवीषि । स्तुवन्तु निन्दन्तु वा सर्व्वे कुलक्रमागतमखिलधनं सकलविदग्धेभ्यो दत्वाऽपि महति राजपथे मकरध्वजमभिषेक्ष्यामि । तद्विदग्धजनमूर्द्धन्य निर्लज्जया निबद्धोमञ्जलिः । सकृदपि त्वया समागन्तव्यमिति । सानुरागम् । चारुहासिनि निदेशवर्त्तिनि दासजने किमत्याऽऽदरेण संह्रियतामयमञ्जलिः । सत्यमागच्छामि शपामि ते पादपङ्कजेन क इव करतललग्नं मुञ्चेत माणिक्यम् । गच्छामि रङ्गोत्सवाय । पुरोऽवलोक्य ।

[विरचित] पट्टदुकूलाः पवनसमुद्धूतपाण्डुरोष्णीषाः ।
करतलकम्पितखड्गाश्चलमसीयान्ति कामिनः पौराः ॥

---

[परिहितेति च पाठान्तरम्]

किञ्च ।

आच्छाद्य स्तनमण्डलीमभिनवज्योत्स्नानिभैरंशुकै
र्भूयस्तत्प्रतिबिम्बितैरवयवैः सम्मोहयन्त्यो जगत् ।
रथ्याभोगनितम्बगौरववशान्मन्दायमानैः पदैः
पर्य्यायाकुलहारनूपुरमिमा गच्छन्ति पौराङ्गनाः ॥

समन्तादवलोक्य । सकौतुकाश्चर्य्यम् ।

क्रीड़ाशैले मदकलमसौ चञ्चलैरर्द्धचन्द्रै
केकारवं वचयति मुदा केलिलोलःशिखण्डी ।
मन्दं मन्दं मदनतरलं सैकते सञ्चरन्ती
दीनारावं दिशति गगने दीर्घिकाराजहंसी ॥

किन्नामनिमित्तमेतस्य किञ्चिदम्भोदशङ्कां पश्यामि । स्मृतिमभिनीय । सर्व्वथासमारब्ध एवरङ्गोत्सवः तथाहि ।

नवाम्बुवाहस्तनिताऽनुकारी विजृम्भते विच्युपदन्निरुन्धन् ।
महोत्सवारम्भविशेषशंसी मनोहरो मङ्गलतूर्य्यनादः ॥

तदविलम्बितमेव गन्तव्यं वामतोऽवलोक्य मनोहरोऽयं समवायः । परस्पराऽकर्णितविनोदानां विलोलविलासिनीनाम् । सप्रणय कौतुकम् । कथमत्रैव मे सखा विलासवीरो विलासवत्या सह महासंरम्भेणाद्यत कलहमातनोति । किञ्चिदुपसृत्य । सखे वीलासवीर केन पणेन प्रवर्त्तते वां द्यूत-

विनोदः । किं ब्रवीषि । यद्यहं पराजितस्त्वां अस्यै दास्यामि हस्तकटकम् एकवारमधः शयनं च । यद्येषा स्व कण्ठादवमुच्य मह्यमर्पयिष्यत्येकावली मेकवारमधरपल्लवञ्चेति । साधु रे साधु । मान-नीयः खलु भवान् पण बन्धचातुर्य्येण ।

सीत्कारगर्भमुदरं स्वयमेव दत्तं
जेता यदि त्वमनु भुंच्व मदालसायाः ।
आलोलहार मणिकुण्डलमन्यथा चे
दस्या लभस्व पुरुषायितमायताक्ष्याः ॥

पदान्तरङ्गत्वा । पुरोऽवलोक्य । अहो रम-णीयता नयनपिधाने कौतुकस्य यदेष चतुरङ्ग-विहारिणीम् ।

मूकीभूतसुखीं विधाय नयनसन्देन दूरात्सखीं
पश्चान्मन्दमुपेत्य पाणियुगलेनाच्छादन्त्या दृशौ ।
अङ्गैस्तत्क्षणजायमानपुलकैर्जानन्नपि प्रेयसी
मस्याः सस्पृहमाध्मन्नथवा नाख्याति नाख्यां युव ाम् ॥

पुरोऽवलोक्य । कथमसौ वसन्तसेनायास्ताम्बूल करण्डवाहकस्ताण्डवस्सत्वरमायाति ।

किं ब्रवीषि । त्वर्य्यतां त्वर्य्यतां स्वामिन्किम-द्यापि विलम्बेनैवं समाहितऽपि शेषोपकरणा देवी भवन्तमेव प्रतिपालयतीत्यहमागतोऽस्मीति । कथय

रे को वा विशेषरङ्गस्य । किं ब्रवीषि । कोऽयमतः परं विशेषो नाम । सोऽपि षोड़शसहस्रान्तः पुरविहारधूर्त्तो वरदराजः करिगिरिशिखरादवतीर्य्य स्वयमेव कल्पितलीलाविलासवेषः सकलरसिकजनधौरेयतामवलम्ब्य माल्यादिभिरागतान्सम्भावयन्विलासमण्डपमध्यास्त इति । तर्ह्ययमितः प्राप्तोऽस्मि । पुरस्तादवलोक्य । अहो रमणीयता मण्डपस्य यदिदानीम् ।

सम्भावितं सपदि हर्म्यतलब्विमानै
र्द्वारं निखात कदलीयुगलाऽभिरामम् ।
स्तम्भावली च रुचिराविमलैर्दुकूलै
र्वर्ण्येत हन्त वचसा कथमस्य लक्ष्मीः ॥

वामतोऽवलोक्य साश्चर्य्यम् ।

गण्डस्थलस्फुरितकाञ्चन कर्णपत्रं
नासा विलीननवमौक्तिकलोभनीयम् ।
आवद्धकञ्चुकमलञ्चितमध्यभाग
मायाति वृन्दमिदमान्ध्रविलासिनानां ॥

किं ब्रवीषि । स्वाभिन्नकेवलमेकस्मादन्येभ्योऽपि देशेभ्यः समागताः विलासिनीः पश्य ।

केशान्तरालगत केतकपत्रजालं
कस्तूरिकाकलितकोमलगण्डमूलम् ।

विन्यस्तकुङ्कुमविशेषकमुत्पलाच्चं
कर्णाटयौवतमिदं कमनीयवेषम् ॥

स्वामिन्नितो दीयतान्दृष्टिः ।

मुक्ताकञ्चुकसंछन्नाः पांड्यनारीपयोधराः ।
मेरुमन्दरविन्ध्यादीन्हसन्तीव महागिरीन् ॥

किमिदं परं कौतुकं रङ्गमण्डपस्य पश्चिमभागमववलोकयतु स्वामी ।

कर्णोत्पलं नयनकान्तिभिरेव पीतं
गात्रप्रभासु कनकाभरणं निमग्नम् ।
बिम्बाधरस्य रुचिभिः पिहिता च लाक्षा
लाटीषु हन्त लघूभूषणमेवमासीत् ॥

एवमनेकदेशादागता विलासिन्यो वर्णयितुन्न शक्या इति । साधु सखे पटीयानसि । पश्य ।

कल्पितचन्दनतिलकं कर्णपरिस्फुरितकनकताटङ्कम् ।
[कलुषयति] मानसम्मेकान्तं कर्णाट कामिनीवदनम् ॥

नेपाली गण्डपालीषु कस्तूरीपङ्कबिन्दवः ।
वदन्ति मदनेभस्य मदनिष्यन्दिनीं दशाम् ॥

सखे सहैव समागच्छ समाजं प्रविशावः । पुरोऽवलोक्य । शिरस्यञ्जलिङ्घटयन् । पश्य । य एष सभानायकत्वेन सिंहासनस्थो हस्तिगिरीशो भगवान् ।

---

[ कवलयतीति पाठान्तरम् ]

भुवनानि विमोहयन्पुरस्ताद्वपुषा सोयमुपाविशद्विलासी।
मदनोपनिषद्रहस्यविद्यां यमुनासीमनिवल्लवाङ्गनानाम्॥

ससंभ्रमं पश्चादवलोक्य सखे किमर्थं विलम्बितोऽसि। पश्य। तत्र भवता वरदराजेन सबहुमानमाहूय स्वकण्ठादवमुच्य मृगमदस्यन्दिनीं सौगन्धिकमालां स्वाङ्गोपलालितमङ्गरागञ्च दत्वा सम्भावितोऽस्मि। समन्तादवलोक्य।

पक्षद्वये कल्पितपङ्क्तिरेषा सभा हरिन्नायकमुद्वहन्तीम्।
विराजते मौक्तिकयष्टिरस्या रङ्गश्रियः कण्ठगतेव रम्या॥

किं ब्रवीषि। सा दृष्टा वसन्तमहोत्सवव्यापृता वसन्तसेनेति। सखे किन्न पश्यसि।

समीक्ष्य मां सस्मितमक्षिकम्प्यैः समीपनिर्दिष्टनिवासभूमिः।
करोल्लसत्काञ्चनवेत्रयष्टिः करोति रङ्गस्थितिमायताक्षी॥

तत्रैवोपविशामः। किं ब्रवीषि। गच्छामि कार्य्यान्तरकारणाय गृह्यतामयं ते प्रणयसुहृत्सङ्गीतशेखर इति। तर्हि गच्छ संगीतशेखर अनुनीय शयनं सकृदपि आरोपिता किमभिनवयौवनारम्भकन्दलितमन्दाक्षमन्दायमानमदनमहोत्सवाऽऽनन्दामन्दाकिनी। किं ब्रवीषि।

कुर्य्यां प्रसाधनविधिं कुचयोः सलीलं
किञ्चिन्नखै रधिकमुत्पुलका च बाला।

सीत्कारमातनुत हन्त स एव नान्दी
कन्दर्पकेलिकलहाद्भुतनाटिकायाः ॥

सखे सम्प्रति किं वर्ण्यतेऽस्या रतिरहस्यसौभाग्यम् ।

पश्यन्तीं परिणामकेलिषु मुहुर्निःशङ्कमालिङ्गतां
प्रोत्कूजत्कलमप्यहीपमधरं स्पर्द्धावती साध्वभूत् ।
नाहं वेद्मि न वेत्ति साच दयिता तत्राऽऽवयोश्चेष्टितं
शय्या वेत्ति नवेत्ति वा स तु कुतः सङ्ग्रामलोलः स्मरः ॥

इति सकौतुकम् । पश्य सखे वामभागं वसन्तसेनायाः ।

कैषा का च न योषा भूषामणिकिरणभूषितैरङ्गैः ।
सन्ध्यारागविश्लिष्टा संदृष्टा भवति चन्द्ररेखेव ॥

किं ब्रवीषि । किमद्यापि न जानासि सा खलु विलासपुरादागतविशालाक्षी सकल-लोकलोचनाऽऽनन्दचन्द्ररेखेति । स्मरणमभिनीय तर्हि शृणुमः । नृत्यगीतवाद्यादिषु महाविदग्धेति निरतिशयनिखिलसम्भोगदायि गम्भीरमस्याला-करणम् ।

आनङ्गीमधिगन्तुमिच्छति दशामस्यावलग्नं क्रमा
दालापो विरसीकरोति मरुतामाहारवार्त्तामपि ।
सन्नाहस्तनयोरयं न सहते चापोन्नतिं शाम्भवी
व्यापारो नयनस्य वाञ्छति हरेराद्यावतारश्रियम् ॥

कथं साम्प्रदायिकैरंगनेपथ्यमुपक्रान्तमेव ।

तन्त्रीश्च न बोधयन्ति नखरैर्मञ्जुस्वरोद्गारिणीं
मायूरीं रचयन्ति मर्दलमुखे मान्यां परे मूर्च्छनाम् ।
शङ्खाङ्के च न पूरयन्ति कतिचित्संप्राप्तमौनव्रता
वंशाङ्के च न वादयन्ति च परे कर्णोचितां माधुरीम् ॥

ससंभ्रमम् । साधु विनयातिशय साधु ।

निषिद्धदृष्टतद्वयै श्रवणमायु तन्त्रीरवै
प्रपञ्चपरिमोहनं किमपि गीतमुज्जृम्भते ।

ऊर्द्ध्वमवलोक्य ।

अयञ्च पुनरञ्चलं पुनरमुष्य सम्भावय
न्नुदञ्चति शनैश्शनैरुपरि कोपि पुष्पाञ्जलिः ॥

नेपथ्याऽभिमुखमवलोक्य । चिराय चरितार्थे

चक्षुः ।

उत्क्षिप्ताम्बिरचय्य बाहुलतिकामुच्चैः कणत्कङ्कणं
पादौ नूपुरमञ्जुनादमुखरौ पर्यायतस्तन्वती ।
दूरोल्लासित कौतुकस्य सहसो दुर्लक्ष्यशेषाकृति
र्नेपथ्यान्तरितेव निश्चलयते नेत्राणि शातोदरी ॥

कथमपनीतमेव नेपथ्यम् । पश्यतावत् ।

कल्हारपत्रोज्ज्वलकेशपाशं गाढाटबद्धस्तनकञ्चुलीकम् ।
अङ्गन्नवाङ्गीरलोभनीयमाभाति रङ्गोचितमङ्गनायाः ॥

संगीतशेखर सकृदपि सम्भावयते मित्रसौभाग्यं

यदिदानीम् ।

चित्रलिखितेव बाला रेखासौभाग्यनिस्तुलैरङ्गैः ।
कलयति हि मानसम्मे सञ्चितमनुरागशंसिभिः पुलकैः ॥

निकषोपलः खलु भवान्नृत्तविद्यायाः ।

मूर्त्तानुद्गिरतीव लोचनमिदं हावान् जगन्मोहना
व्याख्यातावविलोलनूपुरतया पादौ च तालक्रमात् ।
अभ्यस्यानिवकल्पयन्त्यभिनयैरङ्गानि चार्थान्नवान्
कण्ठोपद्गिरतीव कामपि सुधां कर्णोपभोगोत्सुकाम् ॥

सकौतुकम् । कथमेषा विविधकलोचिता ।

दर्शितबहुप्रयोगाख्यिता रङ्गे कलाचिता तन्वी ।
पश्यति हि माङ्कटाचैः पुलकितकन्दर्पवीरभुजदण्डैः ॥

चन्द्रं कलङ्करहितं सफरद्वयञ्च
निस्तोयमन्धतमसञ्च सुगन्धितन्व्याः ।
वक्त्रच्छलेन भुवि सृष्टवतो विधातु
र्वर्ण्येत केन करकौशलमद्भुतन्तम् ॥

साश्चर्य्यम् । किंब्रवीषि सम्भावयति भगवान् वरदराजो दृष्टदिव्यनृत्यगीतोप्यनेन नृत्यगीतादिना सन्तुष्टः । स्वदेवीभोगलालितैर्दिव्याऽऽभरणादिभिर्वासन्तिकामिति । तर्हि गच्छामि । अयमेवाऽवसरः प्रेयसीं सम्भावयितुम् । सलीलमुपसृत्य । अस्तु कुशलं प्रेयस्यै वासन्तिकायै ।

न परं रूपलावण्यैस्त्वया मूर्ध्नि स्मगीदृशाम् ।
विद्ययाऽपि विशालाक्षि विन्यस्ता वामपादुका ॥

किंब्रवीषि । पण्डितः खलु भवान् तृणमपि स्तूणी कर्त्तुम् । भवादृशां वञ्चनामन्तरेण नास्ति मे विद्याकणिकेति । सशिरःकम्पम् । विनयः खलु भूषणं विद्यायाः । वर्णनीयं किमेतद्वासन्तिकायाः तथाऽपि ब्रवीमि । चोल-केरल-नेपाल-मालव-मगध-कलिङ्ग-कर्णाटक प्रभृति विविधदेशागतविटनिकर सङ्कीर्णसकलविद्यारसिकजन्मभूमिरपि त्वया दासी कृतैव रङ्गस्थली अपवार्य । सखि वसन्तसेने दिष्ट्या वर्द्धसे वासन्तिका महोत्सवेन । सस्मितं हस्ते गृहीत्वा । किं ब्रवीषि । भवति स्थिते कानामाहं वासन्तिका महोत्सवस्य । विदितसकलवेदितव्यस्य न किञ्चिद्वक्तव्यमस्ति । तथापि ब्रवीमि । सर्वेषामासनपूर्वमेव वारसुन्दरीरवरधङ्कुर्वन्ति त्वयाऽपिवासन्तिकायै नटनर्तक विटविदूषकसमाजेऽस्मिन्किमपिशासनं दातव्यमिति विभाव्यसस्मितं तथा करोमि । समन्तादवलोक्य । कथं लिखितमेव सामाजिकैः । किञ्चिदवधारय । स्वस्ति समस्तभुवनैकवीरहरिहरहिरण्यगर्भवचनवामाङ्कवचस्थलस्थापित

जयस्तम्भगुम्बरभिदि सार्वभौमपदमनुभवति मधुरध नुषि मकरध्वजे मधुमासपौर्णमास्यां काञ्चीपुरी वास्तव्यः शृङ्गारशेखरो वासन्तिकायै कलत्रपत्रमर्प यति।

मासान्सप्त ममेयमस्तु दयिता दास्यामि चास्यै शतं
दीनारान्प्रतिमाससंवरयुगं नित्यं शतं वीटिकाः।
आमोदं कुसुमं च वाञ्छितमसौ मध्येन्यमीक्षेत चे
द्दत्वा तद्द्विगुणं कलत्र पुनर्मासानियं सप्त च॥

इत्थं कृतं शृङ्गारशेखरेण। इत्यमवगतं राग वर्द्धनेन। एवमनुमितं कुसुमसौरभेण। एवमवो- धितं रतिवल्लभेन। एवमुभयेच्छा लिखितमिदं चित्रलेखेन निरवद्यमिदं सम्यक्परिपाल्यताम्। इदमपि लिखितं पुराणवल्लभायाः वासन्तिका- याः किमपि लौकिकमेव। आस्तामपमपरं कलासु वैलक्षण्यम् जनान्तिकं। घूते चौर्यै निष्प्रति द्वन्द्वोऽस्मि पञ्चषपञ्चरेव पुरमशेषं पुराणखर्वशेषं विधाय कनकवर्षेण भवनं ते पूरयिष्यामि। पत्त्रेन त्वं परिपालय। किं ब्रवीषि। भाव किमन्यदाशा स्यम्।

यौवराज्यमनङ्गस्य युवयोर्नवयौवनम्।
इदानीमस्तु साम्राज्यमिदमव्याहतेप्सितम्॥

तद्गच्छ यथेष्टं विरहवासन्तिकया सहेति । सानन्दम् । परमनुगृहीतोऽस्मि । परिवृत्य वासन्तिकामाश्लिष्य । अद्य खलु निष्कण्टमनङ्गसाम्राज्यं निर्वर्ण्य । सोल्लासम् । सुगात्रि संप्रति हि ।

पूर्वन्नाभिसरसि पतिता पूरिता कान्तितोयैः
पश्चात्तन्मध्ये त्रिवलिविषमे प्रस्खलन्ती क्रमेण ।
प्राप्ताऽभूयस्तनभरमितः प्राप्तुकामा मुखान्ते
कण्ठे लग्ना त्वगमदसिलत्कार्द्दमे दृष्टिरास्ते ॥

सस्मितं सुभ्रु किमेतेन साचीकृतविलोकनेन । सत्यमागच्छामि । शापमि ते कुचकलशेन । परिश्रान्तोऽस्मि । परिणतो वा सरत्र । पश्य अस्य । सोयमवलम्बित मस्त्रिकारमणपटुतरनटनहस्तविस्खलकनकडमरुकविडम्बोगगनतलविहरदमरपुरवारयुवतिकरकमलगलितरामणीयकमणिकटककान्तिर्मन्दाकिनीविकटतटविलसदुटजविबुधगुरुवितीर्णसायन्तनसमयनियमाञ्जलिसलिलसहपतिततपनीयारविन्दसन्देहवाहिनीनिरवधिकतरङ्गितनिखिलमङ्गलारम्भवदीयरङ्गोत्सवदर्शनकुतूहलाऽऽगमनवेगविस्मृष्ट विधाधरवरवर्णिनीवर्णनीय सुवर्णवर्णपत्राऽनुकारीपरिसरचरद्वरुणपुरवरतनुचटुलचरणमणिकटकविस्मरकि

रणकदम्बचुम्बितइव समापतदपरिमितरजनीचर सुभटनिशितशरविदलितनिजतनुगलितरुधिरनिकुरुम्बकरम्बित इव । रणकठोरकशाऽभिघातपरिकुपित जवननिजतुरगखुरधूलीपालीकवलित इव सरभसपतितकटकतटघनरवरथचरणधणरवनिशमनसुख निष्कंपशत्ररकुलमवतरति चरमगिरिवरनितम्बमङ्करतलादंशुमाली ।

तव नृत्तमहोत्सवं विवक्षुर्वरुणान्तःपुरवामलोचनाम् ।
मणिदर्पणमण्डलानुकारी भजते पश्चिमशैलमंशुमाली ॥

सन्ध्याताण्डवचण्ड खण्ड परशुप्रारब्धभीमभ्रमी
वेगस्रस्तकपर्दवासुकिफणामाणिक्य शङ्कावहं ।
मग्नं पायसि पश्चिमस्य जलधेर्मार्त्तण्डविम्बं ततो
ध्वान्तैर्भूतगणैरगाहि भुवनं मन्ये तदन्वेषिभिः ॥

समन्तादवलोक्य । तन्वोदरि तव वृत्तान्त मनुकरोति वासवीयं पश्य ।

आनीताङ्कुरपल्लवैरपनयन्नक्रान्तसः कंचुली
सागं सम्प्रति वासवीमनुभवन्नक्षीणरागः शशी ।
अस्याश्च स्तनसङ्गिनीमिव वहन्नङ्केन कस्तुरिका
मालिङ्गत्ययमादरेण रजनीमर्द्धोन्मिषत्तारकाम् ॥

किञ्च ।

शशाङ्के सन्नद्धे भरत इव सन्ध्या यवनिका
तिरोभूत्वा पुष्पाञ्जलिमिव विकीर्योडुनिकरान् ।

कलं गायन्तीभिः कुमुदवनभृङ्गीभिरधुना
नभोरङ्गं प्राप्ता विहरति निशाला सिक वधूः ॥

तदहं भुक्त्वा गृहीतताम्बूलश्च भवनमेवाऽऽगच्छामि ।

तन्वङ्गि तरलापाङ्गं तव रागतरङ्गितम् ।
आलोकनमिदं जीयादनङ्गकुलदैवतम् ॥

किं ब्रवीषि । वसन्तसेनायास्त्वदभिमतवस्तुभिः सर्वैर्विलासिनः सम्भाविताः । तेषामग्रे सम्भावनीयस्य भवतः किं वा प्रियमिति । शृङ्गारशेखरः । कलभाषिणि एतदेव प्रियम् । यतः ।

कृत्वैव वामचरणं कृतमत्सरायां
चूडापदे सकलवारविलासिनीनाम् ।
सम्भावितासि वरदेन महासभायां
चिह्नैरनन्यसुलभैः सितचामराद्यैः ॥

किञ्च ।

कटकेषु जयन्तु भूपतीनां कवयः काञ्चिकल्पपादपानाम् ।
वचसां वलयानदिव्यगन्धैर्मधुनिष्यन्दमनोहरैर्निगुम्फैः ॥

तथाप्येतदस्तु भरतवाक्यम् ।

अनपेक्ष्य चरित्रमङ्गनाना मधुना कामुकचित्तहारिणीनाम् ।
अनुरागमकृत्रिमं वहन्ती चिरमुल्लोलपचित्तजन्मलक्ष्मीम् ॥
काञ्चीपुरीमधिवसन्कमनीयभूमा
कामीऽऽएवरदः कमलालयायाः ।

आकल्पयन्वसुमतीमनुकल्पमेनाङ्

कल्पद्रुमो भवतु कश्चन मानवानाम् ॥

इति निष्क्रान्तः।



॥ इति वसन्ततिलकभाणः समाप्तः ॥

# विज्ञापनम् ।

कलिकाताराजधान्यां श्रीयुतभुवनचन्द्रवसाकसंस्थापित संवाद ज्ञानरत्नाकराख्य यन्त्रे देवनागराक्षरे मुद्रितपुस्तकविवरणम् ।

( निमतलाघाटष्ट्रीट ३२संख्यक भवन । )

वेणीसंहार नाटकम् ( महाकवि भट्टनारायण प्रणीतम् ) गवर्णमेण्ट संस्कृतपाठशालाध्यापक श्रीतारानाथतर्कवाचस्पति भट्टाचार्य्यकृतव्याख्यान सहितं तेनैव संस्कृतम् । पृष्ठा२६२ मूल्य २

सुश्रुतः, आयुर्व्वेदः, भगवताधन्वन्तरिणोपदिष्टेन सुश्रुतनामधेयेन तच्छिष्येण विरचितः । पृष्ठा ११६० मूल्य ७

कुमारसम्भवम्, सप्तमसर्गान्तम् (महाकवि कालिदास कृतम्) श्रीमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया, श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण विवृतव्याकरणसूत्राद्यंशयान्वितम्, तेनैवसंस्कृतम् । पृष्ठा २६३ मूल्य २

कुमारसम्भव, उत्तरखण्डम् ( महाकवि कालिदासकृतम् ) सम्पूर्णमूलमात्रम् । पृष्ठा ५३ मूल्य ॥०

किरातार्ज्जुनीयम् ( महाकवि भारवि कृतम् ) सम्पूर्ण मूल मात्रम् । पृष्ठा ५३ मूल्य ॥०

दशकुमारचरित, पूर्व्वखण्डम् ( श्रीमदाचार्य्य दण्डिन कृतम् ) नेपालस्य पण्डित श्रीडमरुवल्लभशर्म्मणा परिशोधितम् । पृष्ठा ५५ मूल्य ॥०

## हिन्दी ।

कलिकाता फोर्टउलियमकालेजस्य पण्डित श्रीजगन्नाथशुक्ल विरचित मनभावनी भाषा टीका समेत मूल भगवद्गीता । पृष्ठा २१४, जिल्द मूल्य २

प्रेमसागर दशमस्कन्धभागवत् की भाषा लल्लूलाल का किया पृष्ठा ४९० जिल्द मूल्य २

वैतालपच्चीसी मजहरअलि का किया । पृष्ठा १५८ जिल्द मूल्य १

Printed & Published by B. C. Bysack, 32. Nimt. Ght. Str. Calcutta.